# श्रीमहागणपति नवार्ण वेदपादस्तवः

## श्रीगणेशनवरत्नमाला च

श्रीकण्ठतनय श्रीश श्रीकर श्रीदलार्चित ।
श्रीविनायक सर्वेश श्रियं वासय मे कुले ॥ १॥

गजानन गणाधीश द्विजराज-विभूषित ।
भजे त्वां सच्चिदानन्द ब्रह्मणां ब्रह्मणास्पते ॥ २॥

णषाष्ठ-वाच्य-नाशाय रोगाट-विकुठारिणे ।
घृणा-पालित-लोकाय वनानां पतये नमः ॥ ३॥

धियं प्रयच्छते तुभ्यमीप्सितार्थ-प्रदायिने ।
दीप्त-भूषण-भूषाय दिशां च पतये नमः ॥ ४॥

पञ्च-ब्रह्म-स्वरूपाय पञ्च-पातक-हारिणे ।
पञ्च-तत्त्वात्मने तुभ्यं पशूनां पतये नमः ॥ ५॥

तटित्कोटि-प्रतीकाश-तनवे विश्व-साक्षिणे ।
तपस्वि-ध्यायिने तुभ्यं सेनानिभ्यश्च वो नमः ॥ ६॥

ये भजन्त्यक्षरं त्वां ते प्राप्नुवन्त्यक्षरात्मताम्।
नैकरूपाय महते मुष्णतां पतये नमः ॥ ७॥

नगजा-वर-पुत्राय सुर-राजार्चिताय च ।

सुगुणाय नमस्तुभ्यं सुमृडीकाय मीढुषे ॥ ८॥

महा-पातक-सङ्घात-तम-हारण-भयापह ।

त्वदीय-कृपया देव सर्वानव यजामहे ॥ ९॥

नवार्ण-रत्न-निगम-पाद-संपुटितां स्तुतिम् ।

भक्त्या पठन्ति ये तेषां तुष्टो भव गणाधिप ॥ १०॥

॥ इति श्रीमहागणपति-नवार्ण-वेदपाद-स्तवः समाप्तः॥